॥ श्रीसिद्धिविनायकस्तोत्रम् ॥

जयोऽस्तु ते गणपते देहि मे विपुलां मतिम् ।
स्तवनम् ते सदा कर्तुं स्फूर्ति यच्छममानिशम् ॥ १॥

प्रभुं मंगलमूर्तिं त्वां चन्द्रेन्द्रावपि ध्यायतः ।
यजतस्त्वां विष्णुशिवौ ध्यायतश्चाव्ययं सदा ॥ २॥

विनायकं च प्राहुस्त्वां गजास्यं शुभदायकम् ।
त्वन्नाम्ना विलयं यान्ति दोषाः कलिमलान्तक ॥ ३॥

त्वत्पदाब्जाङ्कितश्चाहं नमामि चरणौ तव ।
देवेशस्त्वं चैकदन्तो मद्विज्ञप्तिं शृणु प्रभो ॥ ४॥

कुरु त्वं मयि वात्सल्यं रक्ष मां सकलानिव ।
विघ्नेभ्यो रक्ष मां नित्यं कुरु मे चाखिलाः क्रियाः ॥ ५॥

गौरिसुतस्त्वं गणेशः शृणु विज्ञापनं मम ।
त्वत्पादयोरनन्यार्थी याचे सर्वार्थ रक्षणम् ॥ ६॥

त्वमेव माता च पिता देवस्त्वं च ममाव्ययः ।
अनाथनाथस्त्वं देहि विभो मे वांछितं फलम् ॥ ७॥

लम्बोदरस्वम् गजास्यो विभुः सिद्धिविनायकः ।
हेरम्बः शिवपुत्रस्त्वं विघ्नेशोऽनाथबांधवः ॥ ८॥

नागाननो भक्तपालो वरदस्त्वं दयां कुरु ।
सिन्दूरवर्णः परशुहस्तस्त्वं विघ्ननाशकः ॥ ९॥

विश्वास्यं मङ्गलाधीशं विघ्नेशं परशूधरम् ।
दुरितारिं दीनबन्धूं सर्वेशं त्वां जना जगुः ॥ १०॥

नमामि विघ्नहर्तारं वन्दे श्रीप्रमथाधिपम् ।
नमामि एकदन्तं च दीनबन्धू नमाम्यहम् ॥ ११॥

नमनं शम्भुतनयं नमनं करुणालयम् ।
नमस्तेऽस्तु गणेशाय स्वामिने च नमोऽस्तु ते ॥ १२॥

नमोऽस्तु देवराजाय वन्दे गौरीसुतं पुनः ।
नमामि चरणौ भक्त्या भालचन्द्रगणेशयोः ॥ १३॥

नैवास्त्याशा च मच्चित्ते त्वद्भक्तेस्तवनस्यच ।
भवेत्येव तु मच्चित्ते ह्याशा च तव दर्शने ॥ १४॥

अज्ञानश्चैव मूढोऽहं ध्यायामि चरणौ तव ।
दर्शनं देहि मे शीघ्रं जगदीश कृपां कुरु ॥ १५॥

बालकश्चाहमल्पज्ञः सर्वेषामसि चेश्वरः ।
पालकः सर्वभक्तानां भवसि त्वं गजानन ॥ १६॥

दरिद्रोऽहं भाग्यहीनः मच्चित्तं तेऽस्तु पादयोः ।
शरण्यं मामनन्यं ते कृपालो देहि दर्शनम् ॥ १७॥

इदं गणपतेस्तोत्रं यः पठेत्सुसमाहितः ।
गणेशकृपया ज्ञानसिध्धिं स लभते धनम् ॥ १८॥

पठेद्यः सिद्धिदं स्तोत्रं देवं सम्पूज्य भक्तिमान् ।
कदापि बाध्यते भूतप्रेतादीनां न पीडया ॥ १९॥

पठित्वा स्तौति यः स्तोत्रमिदं सिद्धिविनायकम् ।
षण्मासैः सिद्धिमाप्नोति न भवेदनृतं वचः
गणेशचरणौ नत्वा ब्रूते भक्तो दिवाकरः ॥ २०॥

इति श्री सिद्धिविनायक स्तोत्रम् ।

॥ विघ्ननिवारकं सिद्धिविनायकस्तोत्रम् ॥

श्री गणेशाय नमः ॥

विघ्नेश विघ्नचयखण्डननामधेय श्रीशङ्करात्मज सुराधिपवन्द्यपाद ।
दुर्गामहाव्रतफलाखिलमङ्गलात्मन् विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ १॥

सत्पद्मरागमणिवर्णशरीरकान्तिः श्रीसिद्धिबुद्धिपरिचर्चितकुङ्कुमश्रीः ।
दक्षस्तने वलयितातिमनोज्ञशुण्डो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ २॥

पाशाङ्कुशाब्जपरशूंश्च दधच्चतुर्भिर्दोर्भिश्च शोणकुसुमस्रगुमाङ्गजातः ।
सिन्दूरशोभितललाटविधुप्रकाशो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ३॥

कार्येषु विघ्नचयभीतविरञ्चिमुख्यैः सम्पूजितः सुरवरैरपि मोदकाद्यैः ।
सर्वेषु च प्रथममेव सुरेषु पूज्यो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ४॥

शीघ्राञ्चनस्खलनतुङ्गरवोर्ध्वकण्ठस्थूलोन्दुरुद्रवणहासितदेवसङ्घः ।
शूर्पश्रुतिश्च पृथुवर्तुलतुङ्गतुन्दो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ५॥

यज्ञोपवीतपदलंभितनागराजो मासादिपुण्यददृशीकृतऋक्षराजः ।
भक्ताभयप्रद दयालय विघ्नराज विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ६॥

सद्रत्नसारततिराजितसत्किरीटः  कौसुम्भचारुवसनद्वय ऊर्जितश्रीः ।
सर्वत्रमङ्गलकरस्मरणप्रतापो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ७॥

देवान्तकाद्यसुरभीतसुरार्तिहर्ता विज्ञानबोधेनवरेण तमोपहर्ता ।
आनन्दितत्रिभुवनेशु कुमारबन्धो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ८॥

इति मौद्गलोक्तं विघ्ननिवारकं सिद्धिविनायकस्तोत्रं सम्पूर्णम् ॥